कः ? वाग्योगविदेव । कुत एतत् । यो हि शब्दान् जानाति अपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः । एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः । अल्पीयांसः शब्दाः । एकैकस्यशब्दस्य बहवोऽपभ्रंशाः । तद्यथा । गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयो ऽपभ्रंशाः । अथ योऽवाग्योगवित् । अज्ञानं तस्य शरणम् । विषम उपन्यासः । नाऽत्यन्त.याऽज्ञानं शरणं भवितुमर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि सोनन्तमाप्नोति जयं परत्र वाग्योगविद् । दुष्यति चाऽपशब्दैः । कः । अवाग्योगविदेव । अथ यो वाग्योगविद् । विज्ञानं तस्य शरणम् । क पुनरिदं पठितम् । भ्राजा नाम श्लोकाः । किं च भोः श्लोका अपि प्रमाणम् । किं नाऽतः ? । यदि श्लोका अपि प्रमाणम् । अयमपि प्रमाणं भवितुमर्हति ।

यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।

पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत् । इति ।

प्रमत्तगीत एषः तत्र भवतः । यस्त्वप्रमत्तगीतस्तत् प्रमाणम् ।

( श्री पातञ्जल महाभाष्यात् १-१-१ )

## * काल विभागः *

सन्ति च खल्वपि कालविभागाः । तिष्ठन्ति पर्वताः स्थास्यन्ति पर्वतास्तस्थुः पर्वता इति । किं शक्ष्यन्त एते शब्दाः प्रयोक्तुमित्यतः सन्ति कालविभागाः । नाऽवश्यं प्रयोगादेव । इह हि भूतभविष्यद्वर्त-

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

मानानां राज्ञां याः क्रियास्ता स्तिष्ठतेरधिकरणम् । इह तावत्तिष्ठन्ति पर्वता इति संप्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु । स्थास्यन्ति पर्वता इति इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यतीषु । तस्थुः पर्वता इति इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तास्वतिक्रांतासु । अपर आहुः । नास्ति वर्तमानः काल इति । अपि चात्र श्लोकानुदाहरन्ति ।

न वर्तते चक्रमिषुर्न पात्यते,
नस्यन्दते सरितः सागराय ।
कूटस्थोयं लोको न विचेष्टिताऽस्ति,
यो ह्येवं पश्यति सोऽप्यनन्धः ॥

मीमांसको मन्यमानो युवा मेधाविसंमतः काकं स्मेहानुपृच्छति किं ते पतितलक्षणम् । अनागतेन पतसि, अतिक्रान्ते च काक न । यदि संप्रति पतसि सर्वो लोकः पतत्ययम् । हिमवानपि गच्छति ।

अनागतमतिक्रांतं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥
क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥

अपर आह । अस्ति वर्तमानः काल इति । आदित्यगतिवन्नोपलभ्यत इति । अपि चाऽत्रश्लोकमुदाहरन्ति ।

विसस्य वाला इव दह्यमाना
न लक्ष्यते विकृतिः सन्निपाते ।
अस्तीति तां वेदयन्ते त्रिभावाः
सूक्ष्मो हि भावोऽनुमितेन गम्यः ॥

( श्री पातञ्जल महाभाष्यस्य
अ० ३-पा० २-आ० २ वर्त्तमाने लट् सूत्रात् )

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

## * एषणात्रय–व्याख्या *

"इह खलु पुरुषेणाऽनुपहतसत्वबुद्धिपौरुषपराक्रमेण हितमिह चाऽमुष्मिश्च लोके समनुपश्यता तिस्र एषणाः पर्येष्टव्या भवन्ति॥ १ ॥

तद्यथा । प्राणैषणा धनैषणा परलोकैषणेति । आसां तु खल्वेषणानां प्राणैषणां तावत्पूर्वतरमापद्येत । कस्मात्प्राणपरित्यागे हि सर्वत्यागः । तस्यानुपालनं स्वस्थस्य स्वस्य स्वस्थवृत्तिरातुरस्य विकारप्रशमनेऽप्रमादस्तदुभयमेतदुक्तं वक्ष्यते च । तद्यथोक्तमनु-वर्तमानः प्राणानुपालनाद्दीर्घमायुरवाप्नोतीति प्रथमैषणा व्याख्याता भवति॥ २ ॥

अथ द्वितीयां धनैषणामापद्येत । प्राणेभ्यो ह्यनन्तरं धनमेव पर्येष्टव्यं भवति । न ह्यतः पापात्पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः, तस्मादुपकरणानि पर्येष्टुं यतेत । तत्रोपकरणोपायाननु-व्याख्यास्यामः ॥ ३ ॥

तद्यथा । कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चाऽन्यान्यपि सतामविगर्हितानि कर्माणि वृत्तिपुष्टिकराणि विद्यात्ता-न्यारभेत कर्तुम् । तथा कुर्वन्दीर्घजीवितमनुभवन्पुरुषो भवतीति द्वितीया धनैषणा व्याख्याता भवति ॥ ४ ॥'

अथ तृतीयां परलोकैषणामापद्येत । संशयश्चात्र, कथं ? भवि-ष्याम इतश्च्युता नवेति। कुतः पुनः संशय इति । उच्यते । सन्तिह्येके प्रत्यक्षपराः । परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः । सन्ति चापरे ये त्वाऽऽगमप्रत्ययादेव पुनर्भवमिच्छन्ति श्रुतिभेदाच्च ।

"मातरं पितरं चैके मन्यन्ते जन्मकारणम् ।
स्वभावं परनिर्माणं यदृच्छां चाऽपरे जनाः" ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यतः संशयः। किं नु खल्वस्ति पुनर्भवो न वेति ॥ ५ ॥ तत्र बुद्धिमान्नास्तिक्यबुद्धिं जह्याद्विचिकित्सां च। कस्मात्? प्रत्यक्षं ह्यल्प मनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तिभिरुपलभ्यते। यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाऽप्रत्यक्षाणि ॥ ६ ॥

सतां च रूपाणामतिसंनिकर्षादतिविप्रकर्षादावरणात्करण-दौर्बल्यान्मनोऽनवस्थानात्समानाभिहारादभिभवादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः। तस्मादपरीक्षितमेतदुच्यते–प्रत्यक्षमेवास्ति नान्यदस्तीति ॥ ७ ॥

× × + × ×

तत्राप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाऽऽप्तागमः। आप्ताऽऽगमादुपलभ्यते दानं तपो यज्ञः सत्यमहिंसा ब्रह्मचर्यमित्यभ्युदयनिःश्रेयसकराणि। न चानतिवृत्तसत्त्वदोषाणामदोषैरपुनर्भवो धर्मद्वारेषूपदिश्यते, धर्मद्वारावहितैश्च व्यपगतभयराग-द्वेषलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्मविद्भिरनुपहतसत्त्वबुद्धिप्रचारैः पूर्वतरैर्महर्षिभिर्दिव्यचक्षुर्भिर्दृष्ट्वोपदिष्टः पुनर्भव इति व्यवस्येदेवं पुनर्भवः प्रत्यक्षमपि चोपलभ्यते ॥ २८ ॥

मातापित्रोर्विसदृशान्यपत्यानि तुल्यसंभवानां वर्णस्वराकृति-सत्त्वबुद्धिभाग्यविशेषाः। प्रवरावरकुलजन्म, दास्यैश्वर्यं, सुखासुखमायुः, आयुषो वैषम्यम्, इहाकृतस्यावाप्तिः, अशिक्षितानां च रुदितस्तनपानहासत्रासादीनां प्रवृत्तिः, लक्षणोत्पत्तिः, कर्मसामान्ये फलविशेषो, मेधा क्वचित्, क्वचित्कर्मण्यमेधा, जातिस्मरणम्, इहागमनमितश्च्युतानां च भूतानां, समदर्शने प्रियाप्रियत्वम् ॥२९॥

अत एवानुमीयते यत्स्वकृतमपरिहार्यमविनाशि पौर्वदेहिकं दैवसंज्ञकमानुबन्धिकं कर्म, तस्यैतत्फलम् इतश्चान्यद्भविष्यतीति, फलाद्बीजमनुमीयते, फलं च बीजात् ॥ ३० ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

युक्तिश्चैषा षड्धातुसमुदयाद्गर्भजन्म आत्मा च परलोक-सम्बन्ध एवेति कर्तृकरणसंयोगात्क्रिया । कृतस्य कर्मणः फलं नाकृतस्य । नाङ्कुरोत्पत्तिरबीजात् । कर्मसदृशं फलम् । नान्यस्माद्बीजादन्यस्योत्पत्तिरिति युक्तिः ॥ ३१ ॥

एवं प्रमाणैश्चतुर्भिरुपदिष्टैः पुनर्भवो धर्मद्वारेष्वनुविधीयते॥३२॥

तद्यथा गुरुशुश्रूषायामध्ययने व्रतचर्यायां दारक्रियायामपत्योत्पादने भृत्यभरणेऽतिथिपूजायां दानेऽनभिध्यायां तपस्यनसूयायां देहवाङ्मनसे कर्मण्यक्लिष्टे देहेन्द्रियमनोऽर्थबुद्ध्यात्मपरीक्षायां मनःसमाधाविति । यानि चान्यान्यप्येवंविधानि कर्माणि सतामविगर्हितानि स्वर्ग्याणि वृत्तिपुष्टिकराणि विद्यात्तान्यारभेत कर्तुम् । तथा कुर्वन्निह चैव यशो लभते प्रेत्य च स्वर्गमिति तृतीया परलोकैषणा व्याख्याता भवति ॥ ३३ ॥

( श्रीचरकसूत्रस्थानस्य एकादशाध्यायात् )

—:०:—

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

कवि-कुल-गुरु श्री कालिदास कृतं

# रघुवंश महाकाव्यम् ।

## प्रथमः सर्गः

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥
क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥
मंदः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥
सोऽहमाजन्मशुद्धाना माफलोदयकर्मणाम् ।
आसमुद्रक्षितीशाना मानाकरथवर्त्मनाम् ॥ ५ ॥
यथाविधिहुताऽग्नीनां यथाकामाऽर्च्चितार्थिनाम् ।
यथाऽपराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥
त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥ कुलकम् ॥
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १० ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दु रिन्दुः क्षीरनिधाविव ॥ १२ ॥

व्यूढोरस्को वृषस्कन्धः शालप्रांशु र्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाऽऽश्रितः ॥ १३ ॥

सर्वाऽतिरिक्तसारेण सर्वतेजोभिभाविना ।
स्थितः सर्वोन्नतेनोर्वी क्रान्त्वा मेरुरिवाऽऽत्मना ॥ १४ ॥

आकारसदृशप्रज्ञः प्रज्ञया सदृशाऽऽगमः ।
आगमैः सदृशाऽऽरम्भ आरम्भ सदृशोदयः ॥ १५ ॥

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाऽभिगम्यश्च यादोरत्नैरिवाऽर्णवः ॥ १६ ॥

रेखामात्रमपि क्षुण्णा दामनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ १७ ॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टु मादत्ते हि रसं रविः ॥ १८ ॥

सेनापरिच्छदस्तस्य द्वयमेवाऽर्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धि र्मौर्वी धनुषि चाऽऽतता ॥ १९ ॥

तस्य संवृतमन्त्रस्य गूढाऽऽकारेङ्गितस्य च ।
फलाऽनुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥

जुगोपाऽऽत्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थ मसक्तः सुखमन्वभूत् ॥ २१ ॥

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणाऽनुबन्धित्वा त्तस्य सप्रसवा इव ॥ २२ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

अनाकृष्टस्य विषयै र्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥ २३ ॥
प्रजानां विनयाधाना द्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥
स्थित्यै दण्डयतो दण्ड्या न्परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्याऽऽस्तां धर्म एव मनीषिणः ॥ २५ ॥
दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥
न किलाऽनुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥
द्वेष्योऽपि संमतः शिष्ट स्तस्याऽऽर्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासी दंगुलीवोरगक्षता ॥ २८ ॥
तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथाहि सर्वे तस्याऽऽसन्परार्थैकफला गुणाः ॥ २९ ॥
स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥
तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासी दध्वरस्येव दक्षिणा ॥ ३१ ॥
कलत्रवन्तमात्मान मवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥
तस्यामात्मानुरूपाया मात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥
संतानाऽर्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥
अथाऽभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दंपती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

स्निग्धगम्भीरनिर्घोष मेकं स्यन्दनमाश्रितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

मा भूदाऽऽश्रमपीडेति परिमेयपुरः सरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥३७ ॥

सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातै राधूतवनराजिभिः ॥ ३८ ॥

मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ३६ ॥

परस्पराऽक्षिसादृश्य मदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाऽऽबद्धदृष्टिषु ॥ ४० ॥

श्रेणीबन्धाद्वितन्वद्भि रस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताऽऽननौ ॥ ४१ ॥

पवनस्याऽनुकूलत्वा त्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णै रस्पृष्टाऽलकवेष्टनौ ॥ ४२ ॥

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्ता वर्घ्याऽनुपदमाशिषः ॥ ४४ ॥

हैयंगवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥४५॥कुलकम्॥

काऽप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

वनान्तरादुपावृत्तैः समित्कुशफलाऽऽहरैः ।
पूर्यमाणमदृश्याग्नि-प्रत्युद्यातैस्तपस्विभिः ॥ ४६ ॥
आकीर्णमृषिपत्नीना मुटजद्वाररोधिभिः ।
अपत्यैरिव नीवार-भागधेयोचितै र्मृगैः ॥ ५० ॥
सेकान्ते मुनिकन्याभि स्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहंगाना मालवालाम्बुपायिनाम् ॥ ५१ ॥
आतपाऽत्ययसंक्षिप्त-नीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थ मुटजाऽङ्गनभूमिषु ॥ ५२ ॥
अभ्युत्थिताऽग्निपिशुनै रतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतै र्धूमैराहुतिगन्धिभिः ॥ ५३ ॥ कुलकम् ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवाऽऽरोहयत्पत्नीं रथादवततार च ॥ ५४ ॥
तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रु मुनयो नयचक्षुषे ॥ ५५ ॥
विधेः सायंतनस्याऽन्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥
तयोर्जगृहतुः पादा न्राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥
तमातिथ्यक्रियाशान्त-रथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याऽऽश्रममुनिं मुनिः ॥ ५८ ॥
अथाऽथर्वनिधेस्तस्य विजिताऽरिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाच माददे वदतां वरः ॥ ५९ ॥
उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥
तव मंत्रकृतो मन्त्रै दूरात्प्रशमिताऽरिभिः ।
प्रत्याऽऽदिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

हविरावर्जितं होत स्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्याना मवग्रहविशोषिणाम् ॥ ६२ ॥
पुरुषाऽऽयुपजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥
त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
साऽनुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥
किं तु वध्वां तवैतस्या मदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥
नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥
मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥
सोऽहमिज्याविशुद्धाऽऽत्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाऽप्रकाशश्च लोकाऽऽलोक इवाऽचलः ॥ ६८ ॥
लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ ६९ ॥
तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहा द्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥
असह्यपीडं भगवन् ! ऋणमन्त्यमवेहि मे ।
अरुंतुदमिवालान मनिर्वाणस्य दन्तिनः ॥ ७१ ॥
तस्मान्मुच्ये यथा तात ! संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥
इतिविज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥
सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।
भाविताऽऽत्मा भुवो भर्तु रथैनं प्रत्यबोधयत् ॥ ७४ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥
धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाऽऽचरः ॥ ७६ ॥
अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥
स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥
ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥
हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजंगपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥
सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥
इति वादिन एवाऽस्य होतुराहुतिसाधनम् ॥
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥
ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाऽङ्कं संध्येव शशिनं नवम् ॥ ८३ ॥
भुवं कोष्णेन कुण्डोध्नी मेध्येनाऽवभृथादपि ।
प्रस्रवेणाभिवर्षन्ती वत्साऽऽलोकप्रवर्तिना ॥ ८४ ॥
रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥
तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्य-प्रार्थनं पुनरब्रवीत् ॥ ८६ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदाऽस्यां पीताम्भसि पिबेरपः ॥ ८९ ॥

वधूर्भक्तिमती चैनामर्चितामातपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥

तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥

अथ प्रदोषे दोषज्ञः संवेशाय विशां पतिम् ।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥ ९३ ॥

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित्कल्पयामास वन्यामेवाऽस्य संविधाम् ॥ ९४ ॥

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥

इति प्रथमः सर्गः

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

## अथ द्वितीयः सर्गः ।

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥
तस्याः खुरन्यासपवित्रपांसु मपांसुलानां धुरि कीर्तनीया ।
मार्ग मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥
निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥
व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥४॥
आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥
स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥
स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥
लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षाऽपदेशान्मुनिहोमधेनो र्वन्यान्विनेष्यन्निव दुष्टसत्वान् ॥ ८ ॥
विसृष्टपार्श्वाऽनुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥
मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन्बाललताः प्रसूनै राचारलाजैरिव पौरकन्याः ॥ १० ॥
धनुर्भृतोऽप्यस्य दयार्द्रभाव माख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाऽऽकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥

शशाम वृष्ट्याऽपि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥

संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥ १७ ॥

आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलंचक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषाऽलसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साऽक्षतपात्रहस्ता ।
प्रणम्य चाऽऽनर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥

वत्सोत्सुकाऽपि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ समाप्य सांध्यं च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥
अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥
सा दुष्प्रधर्षा मनसापि हिंस्रै रित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥
तदीयमाक्रन्दितमार्तसाधो र्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥
स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥
ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषंगा दुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥
वामेतर स्तस्य करः प्रहर्तुर्नखप्रभाभूषितकंकपत्रे ।
सक्तांऽगुलिः सायकपुङ्ख एव चित्रार्पिताऽऽरम्भ इवावतस्थे ॥ ३१ ॥
बाहुप्रतिष्टम्भविवृद्धमन्यु रभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभि रदह्यतान्त र्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥
तमार्यगृह्यं निगृहीतधेनु र्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥
अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥
कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥
अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥
तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥
तस्याऽलमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥
स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥
इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥
प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥
संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥
मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥
स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥
अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥
एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥
भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ ! पितेव पासि ॥ ४८ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४६ ॥
तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥
एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥
निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥
क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥
कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ५४ ॥
सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥
भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥
किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥
सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।
तद्भूतनाथानुग ! नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥
तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५६ ॥
तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१ ॥
तं विस्मितं धेनुरुवाच साधो ! मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥
भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र ! वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥
संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥
वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः !
ऊधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥
इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥
स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥
प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥ ७० ॥
प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥
श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं स्वेनैव पूर्णेन मनोरथेन ॥ ७२ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजाऽर्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भि र्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥
पुरंदरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

इति द्वितीयः सर्गः

---

## तृतीयः सर्गः

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥
शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥
दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥३॥
न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ४ ॥
उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपते रभूदनासाद्यमधिज्यधन्वनः ॥ ५ ॥
क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानाऽवयवा रराज सा ।
पुराणपत्राऽपगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा ॥ ६ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ७ ॥
प्रियानुरागस्य मनःसमुन्नतेर्भुजाऽर्जितानां च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥८॥
सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहाऽऽगतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ ९ ॥
कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥१०॥
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ ११ ॥
दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥१२॥
अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १३ ॥
जनाय शुद्धान्तचराय शंसते कुमारजन्माऽमृतसंमिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १४ ॥
निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १५ ॥
स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १६ ॥
सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १७ ॥
न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ १८ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ १९

पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीराऽवयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधिते रनुप्रवेशादिव बालचन्द्रमाः ॥ २० ॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरंदरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥ २१ ॥

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २२ ॥

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ २३ ॥

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २४ ॥

अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २५ ॥

स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २६ ॥

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ २७ ॥

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ २८ ॥

त्वचं स मेध्यां परिधाय रौरवीमशिक्षताऽस्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ २९ ॥

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३० ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः ।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाऽऽप्रभुः ॥ ३१ ॥
युवा युगव्यायतबाहु रंसलः कपाटवक्षाः परिणद्धकंधरः ।
वपुःप्रकर्षादजयद्गुरुं रघु स्तथापि नीचैर्विनयाददृश्यत ॥ ३२ ॥
ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥ ३३ ॥
नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्री र्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥ ३४ ॥
विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३५ ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ३६ ॥

इति तृतीयः सर्गः

---

## चतुर्थः सर्गः ।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥
दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥
पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

समभेव समाक्रांतं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्य मखिलं चाऽरिमण्डलम् ॥ ४ ॥
छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्माऽऽतपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥
परिकल्पितसांनिध्या काले काले च बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभि रुपतस्थे सरस्वती ॥ ६ ॥
स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ७ ॥
मंदोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ८ ॥
नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाऽभवत्पक्ष स्तस्मिन्नाऽभवदुत्तरः ॥ ९ ॥
पञ्चानामपि भूताना मुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाऽभवत् ॥ १० ॥
यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ ११ ॥
कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १२ ॥
लब्धप्रशमनस्वस्थ मथैनं समुपस्थिता ।
पार्थिवश्री र्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १३ ॥
निर्वृष्टलघुभि र्मेघै र्मुक्तवर्त्मा सुदुःसहः ।
प्रताप स्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १४ ॥
वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १५ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

पुण्डरीकाऽऽतपत्रस्तं विकसत्काशचामरः।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १६ ॥
प्रसादसुमुखे तस्मि श्चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीति रासीत्समरसा द्वयोः ॥ १७ ॥
हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतय स्तदीयानां पर्यस्ता यशसामिव ॥ १८ ॥
इक्षुच्छायानिषादिन्य स्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ १९ ॥
प्रससादोदयादम्भः कुम्भयोनेर्महौजसः।
रघो रभिभवाऽऽशङ्कि चुक्षुभे द्विषतां मनः ॥ २० ॥
मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेल मनुप्रापु र्महोक्षा स्तस्य विक्रमम् ॥ २१ ॥
प्रसवैः सप्तपर्णानां मदगन्धिभि राहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २२ ॥
सरितः कुर्वती गाधाः पथश्चाऽऽश्यानकर्दमान्।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २३ ॥
तस्मै सम्यग्घुतो वह्नि र्वाजिनीराजनाविधौ।
प्रदक्षिणाऽर्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २४ ॥
स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णि रयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २५ ॥
अवाकिरन्वयोवृद्धा स्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाऽच्युतम् ॥ २६ ॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा।
अहितानानिलोद्धूतै स्तर्जयन्निव केतुभिः ॥ २७ ॥
रजोभिः स्यन्दनोद्धूतै र्गजैश्च घनसंनिभैः।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २८ ॥ युग्मम् ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ २९ ॥
मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३० ॥
स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गंगामिव भगीरथः ॥ ३१ ॥
त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्याऽऽसीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३२ ॥
पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३३ ॥
अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३४ ॥
वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ३५ ॥
आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३६ ॥
स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३७ ॥
स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३८ ॥
प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ३९ ॥
द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४० ॥
ताम्बूलीनां दलैस्तत्र रचिताऽऽपानभूमयः ।
नालिकेराऽऽसवं योधाः शात्रवं च पपुर्यशः ॥ ४१ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४२ ॥

ततो वेलातटेनैव फलवत्पूगमालिना।
अगस्त्याचरितामाशा मनाशास्यजयो ययौ ॥ ४३ ॥

बलै रध्युषिता स्तस्य विजिगीषो र्गताध्वनः।
मारीचोद्भ्रान्तहारीता मलयाऽद्रेरुपत्यकाः ॥ ४४ ॥

ससञ्जुरश्वक्षुण्णाना मेलाना मुत्पतिष्णवः।
तुल्यगन्धिषु मत्तेभ-कटेषु फलरेणवः ॥ ४५ ॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।
नाऽस्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४६ ॥

दिशि मन्दायते तेजो दक्षिणस्यां रवे रपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४७ ॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः।
ते निपत्य ददु स्तस्मै यशः स्वमिव सञ्चितम् ॥ ४८ ॥

तस्यानीकै र्विसर्पद्भि रपरान्तजयोद्यतैः।
रामाऽस्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः ॥ ४९ ॥

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम्।
अलकेषु चमूरेणु श्चूर्णप्रतिनिधीकृतः ॥ ५० ॥

मुरलामारुतोद्धूत मगमत्कैतकं रजः।
तद्योधवारबाणाना मयत्नपटवासताम् ॥ ५१ ॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः।
वर्मभिः पवनोद्धूत-राजतालीवनध्वनिः ॥ ५२ ॥

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु।
कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः ॥ ५३ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

अवकाशं किलोदन्वान् रामायाऽभ्यर्थितो ददौ ।
अपरान्तमहीपाल-व्याजेन रघवे करम् ॥ ५४ ॥

मत्तेभरदनोत्कीर्ण-व्यक्तविक्रमलक्षणम् ।
त्रिकूटमेवतत्रोच्चै र्जयस्तम्भं चकार सः ॥ ५५ ॥

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपू स्तत्त्वज्ञानेन संयमी ॥ ५६ ॥

यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालाऽतपमिवाऽब्जाना मकालजलदोदयः ॥ ५७ ॥

संग्राम स्तुमुल स्तस्य पाश्चात्यै रश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेय-प्रतियोधे रजस्यभूत् ॥ ५८ ॥

भल्लाऽपवर्जितै स्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलै रिव ॥ ५९ ॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६० ॥

विनयन्ते स्म तद्योधा मधुभि र्विजयश्रमम् ।
आस्तीर्णाऽजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६१ ॥

ततः प्रतस्थे कौवेरीं भास्वानिव रघु र्दिशम् ।
शरै रुस्त्र रिवोदीच्यान् उद्धरिष्यन्रसानिव ॥ ६२ ॥

विनीताऽध्वश्रमा स्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुंकुमकेसरान् ॥ ६३ ॥

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलाऽऽदेशि बभूव रघुचेष्टितम् ॥ ६४ ॥

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजाऽऽलानपरिक्लिष्टै रक्षोटैः सार्धमानताः ॥ ६५ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः।
उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥ ६६ ॥

ततो गौरीगुरुं शैलमारुरोहाऽश्वसाधनः।
वर्धयन्निव तत्कूटान् उद्धूतैर्धातुरेणुभिः ॥ ६७ ॥

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ६८ ॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः।
गंगाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ६९ ॥

विशश्रमु र्नमेरूणां छायास्वध्यास्य सैनिकाः।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७० ॥

सरलासक्तमातङ्ग-ग्रैवेयस्फुरितत्विषः।
आसन्नोषधयो नेतु र्नक्तमस्नेहदीपिकाः ॥ ७१ ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः।
गजवर्ष्म किरातेभ्यः शशंसु र्देवदारवः ॥ ७२ ॥

तत्र जन्यं रघोर्घोरं पर्वतीयै र्गणै रभूत्।
नाराचक्षेपणीयाश्म-निष्पेषोत्पतितानलम् ॥ ७३ ॥

शरै रुत्सवसंकेतान् स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वो र्गापयामास किंनरान् ॥ ७४ ॥

परस्परेण विज्ञात स्तेषूपायनपाणिषु।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७५ ॥

तत्राऽक्षोभ्यं यशोराशिं निवेश्याऽवरुरोह सः।
पौलस्त्यतुलितस्याऽद्रे रादधान इव ह्रियम् ॥ ७६ ॥

चकम्पे तीर्णलौहित्ये तस्मिन्प्राग्ज्योतिषेश्वरः।
तद्गजालाऽऽनतां प्राप्तैः सह कालाऽगुरुद्रुमैः ॥ ७७ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

न प्रसेहे स रुद्धार्क मधारावर्षदुर्दिनम् ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ७८ ॥
तमीशः कामरूपाणा मत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागै रन्यानुपरुरोध यैः ॥ ७९ ॥
कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८० ॥
इति जित्वा दिशो जिष्णु र्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥ ८१ ॥
स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८२ ॥

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थ श्चिरविरहोत्सुकावरोधान्
राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥ ८३ ॥
ते रेखाध्वजकुलिशाऽऽतपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभि रंगुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८४ ॥

इति चतुर्थः सर्गः

---

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

## पञ्चम सर्गः ।

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥
स मृण्मये वीतहिरण्मयत्वात् पात्रे निधायाऽर्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥
तमर्चयित्वा विधिवद्विधिज्ञ स्तपोधनं मानधनाऽग्रयायी ।
विशांपति र्विष्टरभाजमारात् कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥
अप्यग्रणी र्मन्त्रकृता मृषीणां कुशाग्रबुद्धे ! कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥
कायेन वाचा मनसाऽपि शश्वद् यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमंतरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥
आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥
क्रियानिमित्तेष्वपि वत्सलत्वाद् अभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥
निर्वर्त्यते यै र्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥
नीवारपाकादि कडंगरीयै रामृश्यते जानपदै र्न कच्चित् ।
कालोपपन्नाऽतिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥
अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयाऽनुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥
तवाऽर्हतो नाऽभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितु रात्मना वा प्राप्तोऽसि संभावयितुं वनान्माम् ॥ ११ ॥
इत्यर्घ्यपात्राऽनुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाश स्तमित्यवोचद् वरतन्तुशिष्यः ॥ १२ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वत्र नो वार्त्तमवेहि राजन् ! नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग ! तयातिशेषे ।
व्यतीतकाल स्त्वहमभ्युपेत स्त्वामर्थिभावादिति मे विषादः ॥ १४ ॥

शरीरमात्रेण नरेन्द्र ! तिष्ठन् आभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥

स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते, निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुंक्त ॥ १८ ॥

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

समाप्तविद्येन मया महर्षि र्विज्ञापितोऽभूद् गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥

निर्बन्धसंजातरुषाऽर्थकार्श्य मचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धु मल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

इत्थं द्विजेन द्विजराजकान्ति रावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन् ! यावद्यते साधयितुं त्वदर्थम् ॥२५॥

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

वसिष्ठमन्त्रोक्षणजात्प्रभावाद् उदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७ ॥

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः कैलाशनाथं तरसा जिगीषुः ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोशगृहे नियुक्ताः ।
हिरण्मयीं कोशगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजाऽपि लेभे सुतमाशु तस्माद् आलोकमर्कादिव जीवलोकः ॥३५॥

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥

उपात्तविद्यं विधिवद्गुरुभ्य स्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकांक्ष ॥ ३८ ॥

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥

तं श्लाघ्यसंबन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेन मृद्धां विदर्भाऽधिपराजधानीम् ॥ ४० ॥

अतः परं संग्रहे ऽगृहीतयोः षष्ठसप्तमसर्गयो विषयः कथाप्रसंग-भंगभयादधस्तात्समासेनैवविन्यस्यते—

ततः स राजसूनुरजः कतिपयसुहृत्सैनिकाद्यनुगतः सरणौ श्वापद-कुलशरण्यान्यरण्यानि, विकचराजीवराजिविराजितपयस्विनीः स्रोत-स्विनीः, सरससारसरसितरमणीयपरिसरान् सरोवरान्, तटिनीतटत्रोटन-परिणतकरिणःशिखरिणश्च पश्यन्, पटमण्डपोपचारचारुषु जानपदोपदा-सम्पादितप्रमोदेषु प्रमोदकाननानूनविनोदेषु निवसँश्च निवासेषु परम्परया सुरभिसमीरसमीरिततरुततिनितान्तकान्तं सोमसुतासरिदुपान्तप्रान्तं प्रतिपेदे ।

तत्र च मतंगमुनिवचनप्रतिपन्नमतंगजभावेन, तच्छापप्रतीकार-कारणीभूतस्वशरप्रहारप्रत्यर्पितपूर्वप्रकृतिना, भूयोऽपि गन्धर्वभूयमनुभूयभूयः प्रसेदुषा, प्रियदर्शनतनुजनुषा, प्रियंवदाख्यगन्धर्वेण सह साप्तपदीन-महीनं विधाय तेन च प्रत्युपचिकीर्षया निवेद्यमानमनवद्यं संमोहनास्त्रं तदीयमुरीचकार ।

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेण च नानानदनदीनगनगरनिगमग्रामगहननिवेशान् देशान् विलंघयन् भोजभूमिभुजा भुजाऽभिरक्षितं, विपक्षक्षितिक्षितां तीक्ष्णकटाक्षै-रप्यलक्षितं, सुरस्पृहणीयसम्पत्तिगर्भं विदर्भं समाससाद ।

ततोऽनेकनृपतिकुलाऽलंकारैः कुमारैः परिवारितायामपि, परिभूत-पुरुहूतपरिषत्प्रभायां, स्वयंवरसभायां, प्रचुरनक्षत्रमण्डलीमण्डितायां दिवि चन्द्रिकयेव चन्द्रो नृचन्द्रः पतिंवरयेन्दुमत्या गुणानुरागवत्या स एव वरो वव्रे ।

अथ स्वकीयस्वसु र्विवाहमहामहं तेन सह निर्वर्त्य भोज स्तं विससर्ज । पथि प्रयान्तंच तं महनीयमहसमहमहमिकया किलाऽऽचक्राम पराजितराजचक्रं कतिपयप्रयाणकाऽनन्तरमीर्ष्यया राजकुमारीजिहीर्षया च । रघुनन्दनोपि प्रियंवदप्रदत्तदिव्याऽस्त्रसाचिव्येन द्रागेव निद्राधीनं विधायं तं विरोधिवर्गमनर्गलमिन्दुमत्या सह सहर्षं निजनगरीमव्राजीत् ।

( श्री वागीश्वर विद्यालंकार-
विरचिता चूर्णिकेयम् )

**प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं**
**विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।**
**तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-**
**न्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ ४१ ॥**

इति सप्तमः सर्गः

---

## अष्टमः सर्गः

**अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।**
**वसुधामपि हस्तगामिनीम् अकरोदिन्दुमतीमिवाऽपराम् ॥ १ ॥**

CC-O. Gurukul Kangri Collection, Haridwar. Digitized By Siddhanta eGangotri Gyaan Kosha

